पितृपक्षसमुद्भूता मातृपक्षसमुद्भवाः ।
आत्मसम्बन्धिनो ये च बान्धवास्ते प्रकीर्तिताः ॥ ३०१ ॥

बन्धूनां मधुरं वाच्यं यथायोग्यं सहासनम् ।
संविभागश्च कर्तव्यः सुवर्णाम्बर-भूषणैः ॥ ३०२ ॥

वेतनाः किङ्करा दास्यो दासाः कर्मकरास्तथा ।
बुद्धिखड्गसहायाश्च भृत्यास्ते परिकीर्तिताः ॥ ३०३ ॥

एतेषां रक्षणं सम्यक् तथा भरणपोषणम् ।
दानं सम्माननं कार्यं लोकद्वयहितैषिणा ॥ ३०४ ॥

इति दीनानाथार्त-बन्धु-भृत्यपोषणाध्यायः ॥ १९ ॥

व्याघ्र-सिंह-गजैश्चोरैः शत्रुभिश्चापि विद्रुतः ।
भयाच्छरणमायातः शरणागत उच्यते ॥ ३०५ ॥

रक्षेच्छरणमायातं प्राणैरपि धनैरपि ।
स यशो महदाप्नोति जनैः सर्वैः प्रपूज्यते ॥ ३०६ ॥

क्रतवो विधिसंयुक्ता भीतसत्त्वस्य रक्षणम् ।
तुलया तोलितं तत्र प्राणत्राणं विशिष्यते ॥ ३०७ ॥

इति शरणागतरक्षाध्यायः ॥ २० ॥

राज्यप्राप्तेर्नृपकुलभुवामिन्युपायोपदेशः
सम्यक् सोमेश्वरनृपतिना गर्भसारस्ततेन ।
चक्रे चन्द्रप्रतिमयशसा रञ्जनाय प्रजानां
पुण्यौघानामपि च महतां वृद्धये वृ(बु)द्धये च ॥ ३०८ ॥

इति श्रीमहाराजाधिराजसत्याश्रयकुलतिलक–चालुक्याभरण–श्रीमद्भूलोकमल्ल-
श्रीसोमेश्वरदेवविरचितेऽभिलषितार्थचिन्तामणौ मानसोल्लासे
राज्यप्राप्तेर्हेतुनायककथने प्रथमं प्रकरणम् ।

---

## द्वितीयं प्रकरणम् ।

राज्यप्राप्तिनिमित्तानि कथितानीह विंशतिः ।
तत्स्थिरीभावमुद्दिश्य कारणानि वदाम्यहम् ॥ १ ॥

सत्यं सत्त्वं कुलं शीलं तारुण्यं च सुरूपता ।
दाक्षिण्यमविसंवादो वृद्धसेवा कृतज्ञता ॥ २ ॥

अक्षुद्रपरिवारत्वं बुद्धिर्दैवसहायता ।
वश्यसामन्तता शक्तिर्दक्षत्वं क्षिप्रकारिता ॥ ३ ॥

शौर्यं धैर्यं क्षमौदार्यं शुचित्वं प्रियवादिता ।
उद्योगित्वमनिर्वेदः सर्वदा धर्मकारिता ॥ ४ ॥

जनानुरागः सौभाग्यं शास्त्रशस्त्रास्त्रनैपुणम् ।
विवेको दृढचित्तत्वं कलाकुशलता धनम् ॥ ५ ॥ -

दोषानुरूपदण्डत्वं सर्वसत्त्वहितैषिता ।
दयालुत्वं प्रसन्नत्वं भृत्यानां सुखदर्शिता ॥ ६ ॥

आर्जवं तत्त्वदर्शित्वं सदोत्साहो नयज्ञता ।
मङ्गलाचार इत्येतैर्गुणैर्युक्तो वरो नृपः ॥ ७ ॥

सत्यं शौर्यं क्षमा दानं पञ्चमी स्याद् गुणज्ञता ।
अवश्यम्भाविनः पञ्च गुणास्त्वेते महीभुजाम् ॥ ८ ॥

विभूतिं च तथा कीर्तिं धर्मं च विजयं सुखम् ।
यद्यिच्छेत् सततं राजा गुणानेतान् विधारयेत् ॥ ९ ॥

इति राजगुणा ॥

भाव्यं पथ्याशिना नित्यं नीरुजो जायते ततः ।
व्याधिभिर्वर्जितो राजा राजकार्यक्षमो भवेत् ॥ १० ॥

वलिभिः पलितैर्युक्तो रूपेण रहितो भवेत् ।
स्त्रीजनैर्भृत्यवर्गैश्च भूपतिश्चावमन्यते ॥ ११ ॥

तस्माद् रसायनान् योगान् यत्नात् सेवेत पार्थिवः ।
दृढगात्रो भवेत् तेन वलीपलितवर्जितः ॥ १२ ॥

जीवेच्च सुचिरं कालं राजा रोगविवर्जितः ।
तस्माद् रसायनं वक्ष्ये नृपाणां हितकाम्यया ॥ १३ ॥

रसायनक्रिया द्वेधा कथिता पूर्वसूरिभिः ।
कुटीप्रवेशनादेका वातातपसहा परा ॥ १४ ॥

कुटीप्रवेशका वर्ज्या लोकरक्षापरैर्नृपैः ।
वातातपसहा सेव्या राजकार्याविनाशिनी ॥ १५ ॥

कृष्णपक्षत्रयोदश्यां सन्ध्यायां शाल्मलीतरुम् ।
वलि-पूजादिकं कृत्वा रक्तसूत्रेण वेष्टयेत् ॥ १६ ॥

' ॐ ह्रीं अमृतस्यन्दिनी अमृतं स्रव स्वाहा '

समकृत्वः प्रयुक्तेन मन्त्रेणानेन शाल्मलीम् ।
अभिमन्त्र्य कुठारेण हन्याद् धारान् बहून् सुधी- ॥ १७ ॥

तस्या निर्यासमादाय प्रभाते भास्करोदये ।
धात्र्या भृङ्गशतावर्या गुडूच्याः स्वरसैः पृथक् ॥ १८ ॥

सप्त वारान् प्रतिरसं तेन भावनमाचरेत् ।
सच्चूर्णोत्थरसले कुर्याद् गुटिका बदरैः समाः ॥ १९ ॥

प्रतिमासमेकैकां धारयेद् गुटिकां मुखे ।
अष्टौ दिवसके याते नूतना रदना नवाः ॥ २० ॥

सम्भवन्ति ततः केशा भृङ्गपक्षसमत्विषः ।
द्व्यष्टवर्षाकृतिर्दृश्यो वल-वीर्यसमन्वितः ॥ २१ ॥

समासहस्रजीवी स्यान्नात्र कार्या विचारणा।
मूल-त्वक्-पत्र-पुष्पाणि फलमित्यङ्गपञ्चकम् ॥ २२ ॥

आहृत्य शाल्मलीवृक्षात् सूक्ष्मचूर्णं तु कारयेत्।
मधुना सर्पिषा युक्तं बिडालपदमात्रकम् ॥ २३ ॥

तल्लिहेत् प्रातरुत्थाय मासमेकं हिताशनः।
मासेन जायते तेन वलीपलितवर्जितः ॥ २४ ॥

मासद्वयप्रयोगेण मत्तेभबलभाग् भवेत्।
जीवत्यब्दसहस्राणि तेजस्वी तरुणाकृतिः ॥ २५ ॥

नीरुजो वीर्यसम्पन्नो नात्र कार्या विचारणा।
पुष्यार्कदिवसे याते हस्तिकर्णीं समाहरेत् ॥ २६ ॥

छायाशुष्कां प्रकुर्वीत समूलां चूर्णयेत् ततः।
वाससा गालितं सूक्ष्मं मधु-सर्पिःसमाप्लुतम्।
स्निग्धभाण्डे निधायाथ धान्यराशौ निगूहयेत् ॥ २७ ॥

एकविंशे दिने याते समुद्धृत्य तदौषधम्।
पलं पलं प्रतिदिनं भक्षयेदवतन्द्रितः ॥ २८ ॥

यावद् दिनशतं याति तावदम्लं विवर्जयेत्।
मुद्गयूषसमायुक्तं भुञ्जीत मधुरं लघु ॥ २९ ॥

वर्षषोडशदेशीयो मेधावी कोकिलस्वरः।
योजनानां शतं याति दिनेनैकेन मानवः॥ ३० ॥

नवनागबलोपेतो जीवेदब्दसहस्रकम्।
हस्तिकर्णीप्रयोगेण निश्चितं भवभाषितम् ॥ ३१ ॥

सितां रक्तां च पीतां च कृष्णां मुण्डिं चतुर्विधाम्।
पञ्चम्यां शुक्लपक्षस्य पूर्णिमायां तु वा निशि ॥ ३२ ॥

रोहिण्यां श्रवणे पुष्ये रेवत्यां वा समुद्धरेत् ।
पञ्चाङ्गानि समाहृत्य छायायां परिशोषयेत् ॥ ३३ ॥

सर्पिषा मधुना सार्द्धं बिडालपदमात्रकम् ।
तच्चूर्णमुपयुञ्जीत क्षीरषष्टिकभोजनः ॥ ३४ ॥

एकविंशे दिने याते दिव्यदेहो भवेन्नरः ।
मासत्रयप्रयोगेण पुमान् प्राप्नोत्यदृश्यताम् ॥ ३५ ॥

पञ्चमासप्रयोगेण मोदते विबुधैः सह ।
मासषट्कप्रयोगेण चिरायुः खेचरो भवेत् ॥ ३६ ॥

श्वेतस्य ब्रह्मवृक्षस्य पत्रं पुष्पं फलं हरेत् ।
शोषयित्वा तु तच्चूर्णं भक्षयेन्मधुसर्पिषा ॥ ३७ ॥

सप्तरात्रप्रयोगेण वलीपलितवर्जितः ।
द्विपञ्चवर्षाकृतिर्मर्त्यो जीवेदब्दशतत्रयम् ॥ ३८ ॥

भ्रमरीं पुष्यनक्षत्रे समूलां पल्लवान्विताम् ।
शोषयित्वा तु तच्चूर्णं शुद्धकायप्रयत्नवान् ॥ ३९ ॥

सर्पिषा मधुना सार्द्धं भक्षयेत् कर्षमात्रकम् ।
गव्यक्षीरसमायुक्तं कुर्याच्छालयन्नभोजनम् ॥ ४० ॥

ज्वराः सर्वे विनश्यन्ति मुखरोगो जलग्रहः ।
चक्षुःश्रोत्रभवो रोगः सर्वशूलं प्रशाम्यति ॥ ४१ ॥

कण्डूतिः किटिभो दाहः कुष्ठं लूता भगन्दरः ।
प्रमेहो जठरो गुल्मः क्षयोऽपस्मार एव च ॥ ४२ ॥

सप्ताहे प्रथमे याते नश्यन्त्येता रुजः स्फुटम् ।
प्राप्ते द्वितीयसप्ताहे दिव्यदेहो भवेन्नरः ॥ ४३ ॥

---

१ B दल्पान ।

तृतीये भूतलस्थानि निधानान्यपि पश्यति ।
चतुर्थे कुञ्चिता नीला जायन्तेऽस्य शिरोरुहाः ॥ ४४ ॥

समासहस्रत्रितयं जीवेत् तारुण्यसंयुतः ।
पञ्चमे गन्धनीरजगन्धं गात्रे वहत्यलम् ॥ ४५ ॥

षष्ठे वाचस्पतिप्रख्यः प्रज्ञावान् जायते नरः ।
सप्तमे पूर्णचन्द्राभः सर्वाह्लादकरो भवेत् ॥ ४६ ॥

अष्टमे सर्वसत्त्वानां पीयूषं वितरत्यसौ ।
सप्तद्वीपाधिपत्यं च नवमे सप्तके भवेत् ॥ ४७ ॥

भूतं भव्यं भविष्यं च दशमे वेत्ति सप्तके ।
अश्रुतान्यपि शास्त्राणि जानात्येकादशे नरः ॥ ४८ ॥

द्वादशे सप्तके प्राप्ते द्वितीय इव मन्मथः ।
वशीकरोति सर्वाणि नर-नारीमनांस्यपि ॥ ४९ ॥

संवत्सरोपयोगेन समालक्षत्रयं सुखी ।
जरापलितमुक्ताङ्गो जीवत्येव न संशयः ॥ ५० ॥

एवं रसायनं प्रोक्तमव्याधिकरणं नृणाम् ।
नृपाणां हितकामेन सोमेश्वरमहीभुजा ॥ ५१ ॥

इति रसायनम् । इति स्वाम्यध्याय ॥ १ ॥

कुलीनाः श्रुतसंपन्नाः शुचयश्चानुरागिणः ।
शूरा धीराश्च नीरोगा नीतिशास्त्रविशारदाः ॥ ५२ ॥

प्रगल्भा वाग्मिनः मान्या रागद्वेषविवर्जिताः ।
वैराग्यचाप्यगम्भीराः सचिवा स्युर्विभूतये ॥ ५३ ॥

सत्यसन्धा महात्मानो दृढचित्ता निरामयाः ।
जनानां सम्मता दक्षाः सचिवा नृपसम्पदे ॥ ५४ ॥

सकृता राजकार्येषु रागद्वेषविवर्जिताः ।
आय-व्यये च निपुणाः सचिवाः कोशवृद्धये ॥ ५५ ॥

अमार्गे वर्तमानस्य नृपस्य प्रतिकूलगाः ।
बोधयन्तः प्रियैर्वाक्यैः सचिवाः स्युर्नृपर्द्धये ॥ ५६ ॥

अन्वयादागतान् शुद्धानुपधाभिः परीक्षितान् ।
सचिवान् सप्त चाष्टौ वा कुर्वीत मतिमान् नृपः ॥ ५७ ॥

स्वदेशजाताः सत्प्रज्ञा ऊहापोहविचक्षणाः ।
देशकालविदो धीराः साध्यासाध्यविवेकिनः ॥ ५८ ॥

परेङ्गितज्ञा धीमन्तः स्वाकारस्य निगूहकाः ।
मन्त्रसंरक्षकाश्चाप्ता मन्त्रिणः स्युर्महीपतेः ॥ ५९ ॥

इति मन्त्रिलक्षणम् ॥

त्रय्यां च दण्डनीत्यां च शान्तिकर्मणि पौष्टिके ।
आथर्वणे च कुशलः स स्याद् राजपुरोहितः ॥ ६० ॥

इति पुरोहितलक्षणम् ॥

षोडशभिर्हीना षष्टिः प्रभवाद्यब्दसंयुता ।
तानैरपि समायुक्ता शकभूपोद्भवाः समाः ॥ ६१ ॥

एकपञ्चाशदधिके सहस्रे शरदां गते ।
शकस्य सोमभूपाले सति चालुक्यमण्डने ॥ ६२ ॥

समुद्ररशनामुर्वीं शासति क्षतविद्विषि ।
सर्वशास्त्रार्थसर्वस्वपाथोधिकलशोद्भवे ॥ ६३ ॥

सौम्यसंवत्सरे चैत्रमासादौ शुक्रवासरे ।
परिशोधितसिद्धान्तलब्धाः स्युर्ध्रुवका इमे ॥ ६४ ॥

षड्गुणा घटिकाः सप्त पलान्यपि च विंशतिः ।
मानि षड्विंशतिरेकत्रिंशदपि च नाडिकाः ॥ ६५ ॥

प्रतिमासं क्षिपेद् वारं द्वात्रिंशन्नाडिकास्तिथौ ।
नक्षत्रे द्वे पदे द्वे च नाड्यश्चैकादशापराः ॥ ६६ ॥

योज्यास्त्याज्याः पुनर्योज्या वारे नाडीषु पिण्डके ।
नक्षत्रे च पुनर्योज्यास्तिथिरेतावता भवेत् ॥ ६७ ॥

तिथौ वारेण संयुक्ते सप्तभिश्च विभाजिते ।
अवशिष्टो भवेद् वार एवं वारविनिर्णयः ॥ ६८ ॥

पदे युक्तं तिथौ भागं चतुर्दशभिराहरेत् ।
चतुर्दशावधि ज्ञेयं धनं क्षिप्रमृणं भवेत् ॥ ६९ ॥

आद्ये त्रयोदशे पञ्च द्वितीये द्वादशे दश ।
एकादशे तृतीये च नाड्यः पञ्चदश स्मृताः ॥ ७० ॥

चतुर्थे दशमे तु स्यादेकोना विंशतिस्तु ताः ।
पञ्चमे नवमे नाड्यो द्वाविंशतिरुदीरिताः ॥ ७१ ॥

षष्ठेऽष्टमे च घटिकाश्चतुर्विंशतिरीरिताः ।
सप्तमे घटिका ज्ञेयाः सहरूपया पञ्चविंशतिः ॥ ७२ ॥

मकरे सूर्यघटिकास्तिस्रः षट् च प्रवेशयेत् ।
कर्कटेऽप्येवमेव स्याद् घटिकास्तु वियोजयेत् ॥ ७३ ॥

कुम्भे द्वादश विज्ञेयाः संयोज्या रविनाडिकाः ।
तावत्यो घटिका सिंहे रेचनीया विचक्षणैः ॥ ७४ ॥

मीने रुद्राश्च रुद्राश्च योज्याः सूर्यस्य नाडिकाः ।
तावत्य एव कन्यायां स्फोटनीया मनीषिभिः ॥ ७५ ॥

मेषे रुद्रा दिशो नाड्यो मेलनीया धनाभिधाः ।
तुलायां नाडिकास्तास्तु वारणीया ऋणाभिधाः ॥ ७६ ॥

वृषेऽष्टौ षट् च नाड्यः स्युर्मिश्रणीया विपश्चिता ।
अपसार्यास्तु ता नाड्यो वृश्चिके परिकीर्तिताः ॥ ७७ ॥

युग्मे तिस्रश्च शून्यं च यत्येद् गणकोत्तमः।
तदेव वारयेद् राशौ कोदण्डाख्ये विचक्षणः॥ ७८॥

रविना संयवर्णऽत्र चतुर्भिर्गुणयेत् तिथिम्।
तृतीयं तु तिथेर्भागं नक्षत्रघटिका अपि॥ ७९॥

धनाख्या रविनाडयोऽत्र योज्यास्त्याज्या ऋणाभिधाः।
संयोज्य विभजेत् षष्ट्या स्वर्धमृक्षेण योजयेत्॥ ८०॥

वक्ष्यामि शशिनक्षत्रं सूर्यर्क्षे योजयेत् तिथिम्।
तिथिं सद्गुणयेत् षड्भिर्योजयेत् तिथिनाडिभिः॥ ८१॥

शोध्यं तद् रविनाडीषु ततः शशिभमाप्यते।
शशि-रवियोगे योगो नाडियोगेऽस्य नाडिकाः॥ ८२॥

हन्याद् द्वाभ्यां तिथिं तत्र त्याज्यमेकं ततो घटीः।
दिनस्य स्फोटयेत् तत्र सप्तभि परिभाजिते॥ ८३॥

करणं जायते शिष्टं भुक्तिः सूर्योदयात् पुरः।
करणं घटिकास्त्रिंशदिति पञ्चाङ्गनिर्णयः॥ ८४॥

इति पञ्चाङ्गनिर्णयः॥

अनेन विधिनाऽऽनीय तिथिवारसमन्वितम्।
नक्षत्रं च तथा योगं करणं गणकोत्तमः॥ ८५॥

अभिषेके पट्टबन्धे विवाहे जातकादिषु।
गृहप्रवेशे यात्रायां गृहारम्भे च सङ्गरे॥ ८६॥

शुक्ले चन्द्रबलं मुख्यं कृष्णे ताराबलाबलम्।
शतानि पञ्च दोषाणां बुधो हन्ति विनिश्चितम्॥ ८७॥

शुक्रः पञ्च सहस्राणि दोषाणां हन्ति निश्चितम्।
लक्षमेकं तु दोषाणां सुराचार्यो व्यपोहति॥ ८८॥

एवं ग्रहबलं ज्ञात्वा दुर्बलत्वं च पापिनाम् ।
सर्वं यः कथयेत् सम्यक् स कार्यो गणको नृपैः ॥ ८९ ॥

इति ज्योतिर्विद् गणकलक्षणम् ॥

कुलजः शीलवान् धीरश्चतुर्भाषाविशारदः ।
गजाश्वारोहणे दक्षः शस्त्र-शास्त्रविचक्षणः ॥ ९० ॥

शकुने च निमित्ते च चिकित्सायां च वेदिता ।
वाहभेदविधानज्ञः सारेतरविशेषवित् ॥ ९१ ॥

दाता प्रियंवदो दान्तो मतिमान् दृढनिश्चयः ।
राज्ञा सेनापतिः कार्यः शूरो व्यूहविशेषवित् ॥ ९२ ॥

इति सेनापतिलक्षणम् ॥

स्मृतिशास्त्रार्थकुशला रागद्वेषविवर्जिताः ।
धर्माधिकारिणः कार्या विलोभा भयवर्जिताः ॥ ९३ ॥

सभार्त्तैः सह समालोच्य यथोक्तं दण्डमाचरेत् ।
शक्तो राज्ञा विचारज्ञः कार्यो दण्डधरो द्विजः ॥ ९४ ॥

इति धर्माधिकारिसभाध्यक्षलक्षणम् ॥

लोहवस्त्राजिनादीनां रत्नानां च विभेदवित् ।
व्यये च तद्विशेषज्ञो रक्षणे निपुणः शुचिः ॥ ९५ ॥

अनाहार्यः सुसन्तुष्टश्चाप्तो बहुकुटुम्बकः ।
सावधानो गणितविद् भाण्डागारे नियोजयेत् ॥ ९६ ॥

एकाद्या नवपर्यन्ता नवैकाङ्काः स्वरूपतः ।
दशोत्तरक्रमेणैते वर्धन्ते बिन्दुवर्धिताः ॥ ९७ ॥

बिन्दुरेको दशस्थाने शते बिन्दुद्वयं भवेत् ।
बिन्दुत्रयं सहस्रे स्यादयुते तच्चतुष्टयम् ॥ ९८ ॥

बिन्दवः पञ्च लक्षे स्युः प्रयुते बिन्दवस्तु षट् ।
बिन्दवः सप्त कोटौ स्युरर्बुदे चाष्ट बिन्दवः ॥ ९९ ॥

बिन्दवो नव पद्मे स्युः खर्वे स्युर्दश बिन्दवः ।
एकादश निखर्वे तु द्वादश स्युर्महाम्बुजे ॥ १०० ॥

शङ्खे त्रयोदश प्रोक्ताः समुद्रे मनुबिन्दवः ।
अन्त्यसंज्ञे समाख्याता बिन्दवस्तिथिसंज्ञया ॥ १०१ ॥

द्विरष्ट बिन्दवो मध्ये परार्धे दश सप्त च ।
एवमष्टादशस्थानं गणितं व्यावहारिकम् ॥ १०२ ॥

एकाङ्के बिन्दुरेकश्चेद् दशकं तत् प्रकीर्तितम् ।
द्वितीयाङ्के पुरो बिन्दौ सङ्ख्या विंशतिरिष्यते ॥ १०३ ॥

एवं तृतीयाद्यङ्केषु बिन्दुः स्यात् पुरतो यदि ।
त्रिंशदाद्या तदा सङ्ख्या नवत्यन्ता प्रकीर्तिता ॥ १०४ ॥

शताधिके परार्धान्ते यावन्तो बिन्दवः स्थिताः ।
यस्याङ्कस्य पुरोभागे तावत्सङ्ख्या तु सा भवेत् ॥ १०५ ॥

अङ्काः कतिपये स्थाप्या गुणनीयतया स्थिताः ।
अधस्तात् प्रथमाङ्कस्य गुणकाभ्याङ्कमालिखेत् ॥ १०६ ॥

एकैकं गुणयेत् सर्वमुपरिस्थमधस्तनैः ।
लब्धं निवेशयेत तत्र स्वाङ्कस्योपरि लेखयेत् ॥ १०७ ॥

एकादिगुणने योज्या बुधैरङ्का विपर्ययात् ।
लब्धं तु दशकस्थानं पूर्वेणाङ्केन योजयेत् ॥ १०८ ॥

गुणाकारक्रमेणाद्यानङ्कान् कतिपयान् न्यसेत् ।
विभाजकानधस्तेषां पुरतं विन्यसेद् बुधः ॥ १०९ ॥

अधोऽङ्कं हृदये कृत्वा तर्कयेदङ्कमूर्ध्वगम् ।
विभागो लभ्यते येन तेन भागं प्रकल्पयेत् ॥ ११० ॥

अनेन क्रमयोगेण भजनीयं विभाजयेत् ।
एकत्र स्थापयेल्लब्धमवशिष्टं तथाऽन्यतः ॥ १११ ॥

अवशिष्टं पुनर्भङ्क्त्वा यथाभागानुसारतः ।
लब्धे तु मेलयेत् तत् तु भागहारोऽयमीदृशः ॥ ११२ ॥

प्रमाणं फलमिच्छेति राशित्रितयमुच्यते ।
इच्छया गुणितं वस्तु प्रमाणेन विभाजयेत् ॥ ११३ ॥

प्रमाणं द्रव्यमाख्यातं फलं द्रविणमिष्यते ।
द्रव्यजातिविभागोत्थामिच्छामिच्छन्ति सूरयः ॥ ११४ ॥

त्रैराशिकमिदं प्रोक्तं गणितं गणकोविदैः ।
पञ्चराशिकमत्रैव सप्तराशिकमेव च ॥ ११५ ॥

नवराशिकमप्यस्मिन् ज्ञेयं त्रैराशिके विधौ ।
सकलं गणितं प्रोक्तं सङ्क्षेपेण प्रसङ्गतः ॥ ११६ ॥

वक्ष्यामि गणितं भिन्नमुद्देशो खण्डितं हि यत् ।
रूपमंशस्तथा च्छेदो नामैतद् व्यावहारिकम् ॥ ११७ ॥

रूपमूर्ध्वमधश्चांशस्तस्याधः छेद इष्यते ।
राशिद्वयं प्रकर्तव्यं गुण्यं गुणकमेव च ॥ ११८ ॥

संपूर्णं कथ्यते रूपमंश उद्धरितो भवेत् ।
तस्यांशस्य विभागो यः स च्छेदः परिकीर्तितः ॥ ११९ ॥

गुणयेदंशमंशेन च्छेदं छेदेन बुद्धिमान् ।
फलांशं विभजेत् तज्ज्ञः फलेन च्छेदजन्मना ॥ १२० ॥

गुणनं भिन्नमाख्यातं भिन्नभागोऽभिधीयते ।
रूपांशच्छेदमार्गेण भाज्यो राशिर्विधीयते ॥ १२१ ॥

भाजकश्च तथा चान्यो राशिर्लेख्यो विधिना ।
छेदेन गुणयेद् रूपं लब्धमंशेन मेलयेत् ॥ १२२ ॥

छेदेनांशं विपर्यासाद् गुणयेद् राशियुग्मके ।
भाजकेन भजेद् भाज्यं भिन्नभागोऽयमीदृशः ॥ १२३ ॥

इति गणितम् ॥

ईदृशं गुणकारं च भागहारं च तत्त्वतः ।
त्रैराशिकविधानं च यो जानाति विनिश्चितम् ॥ १२४ ॥

अलुब्धः सावधानश्च रागद्वेषविवर्जितः ।
स राज्ञा गणकः कार्यः कोशे राष्ट्रे च धीमता ॥ १२५ ॥

इति कोशाध्यक्षगणकलक्षणम् ॥

उन्नतो रूपवान् दक्षः प्रियवाग् दर्पवर्जितः ।
ग्राही चित्तस्य सर्वेषां प्रतीहारः प्रशस्यते ॥ १२६ ॥

इति प्रतीहारलक्षणम् ॥

प्रगल्भो मतिमान् दक्षः सर्वभाषाविशारदः ।
सन्धि-विग्रहतत्त्वज्ञो लिपिज्ञोऽक्षरवाचकः ॥ १२७ ॥

सामन्तमण्डलेशानां मान्यकार्यां विशेषतः ।
आवाहने विसर्गे च स्थापने निपुणो भृशम् ॥ १२८ ॥

षाड्गुण्यविधितत्त्वज्ञो देश-काल-विभागवित् ।
आय-व्ययौ च लोकं च देशोत्पत्तिं च वेत्ति यः ॥ १२९ ॥

अर्थरक्षापरो भृत्यः कृत्याकृत्यविवेकवित् ।
सान्धिविग्रहिकः कार्यो राज्ञा कार्यविशारदः ॥ १३० ॥

इति सान्धिविग्रहिकलक्षणम् ॥

सर्वदेशलिपिज्ञाता लेखने कुशलः पटु ।
अर्थानां वाचको धीमान् योग्यो राज्ञा स लेखकः ॥ १३१ ॥

इति लेखकलक्षणम् ॥

आयुर्वेदविदश्वानां निमित्त-शकुनादिवित् ।
शिक्षावेदी तुरङ्गाणां भूमिभागविशारदः ॥ १३२ ॥

बलाबलज्ञाभिज्ञः प्रियवाक् प्रियदर्शनः ।
कृतविद्यश्च शूरश्च सारथी पार्थिवोचितः ॥ १३३ ॥

इति सारथिलक्षणम् ॥

असम्भेद्यः शुचिर्दक्षः कृतान्नस्य परीक्षकः ।
सूदानां च विशेषज्ञः सूदाध्यक्षो विधीयते ॥ १३४ ॥

कुलक्रमसमायातास्तुष्टाश्चानुकारिणः ।
कृत्तकेशनखा दान्ताः पराभेद्या नृपे रता ॥ १३५ ॥

अन्न-पानविशेषज्ञा मांसपाकविशारदाः ।
शाक-पाककलादक्षाः पक्वान्नकरणे बुधाः ॥ १३६ ॥

पानव्यञ्जनतत्त्वज्ञाः खण्डपाकस्य वेदिनः ।
क्षीरप्रकारबोद्धारः सूदाः कार्या महीभुजा ॥ १३७ ॥

इति सूदलक्षणम् ॥

नराणां च गजानां च वाजिनां च गवामपि ।
मृगाणां च खगानां च ये जानन्ति चिकित्सितम् ॥ १३८ ॥

परं पारङ्गताः सम्यगष्टाङ्गे तु चिकित्सिते ।
शस्त्रकर्मकलादक्षा मन्त्रे तन्त्रे च कोविदाः ॥ १३९ ॥

देहे शिरसि बाले तु विषे शल्ये ग्रहेऽपि च ।
वृषे रसायने चैव कुशला भिषजोऽपरे ॥ १४० ॥

रोगनामनिदानं तु रुजं जानन्ति तत्त्वतः ।
औषधं रूप नामभ्यां जानन्तो भिषजो वराः ॥ १४१ ॥

वमौ विरेचने नस्ये वस्तौ शस्त्रक्रियास्वपि ।
शक्यन्ते भिषजः सम्यक् निष्णाताः पञ्चकर्मसु ॥ १४२ ॥

यत् किञ्चिदौषधैः साध्यं शरीरेषु हिताहितम् ।
सम्यग् विदन्ति ये वैद्या नृपयोग्या भवन्ति ते ॥ १४३ ॥

कृच्छ्रसाध्यमसाध्यं वा साध्यं जानन्ति तत्त्वतः ।
देशं कालं वयोऽवस्थां प्रकृतिसात्म्यमेव च ॥ १४४ ॥

असाध्याः परकीयाणामात्मस्वामिहिते रताः ।
धर्मज्ञा दृढचित्ताश्च वैद्याः कार्या महीभुजा ॥ १४५ ॥

इति वैद्यलक्षणम् ।

विरूपो लोभहीनश्च सावधानो जितेन्द्रियः ।
इङ्गिताकारकुशलः शुद्धान्ताध्यक्ष इष्यते ॥ १४६ ॥

सुप्तकामोपमाः[1] शुद्धाः पुरुषाः कृतबुद्धयः ।
अन्तःपुरेरक्षकाः कार्या नृपेण शुचियोनयः ॥ १४७ ॥

धर्मज्ञाः शुचयो धीराः प्रभुभक्ता जितेन्द्रियाः ।
कार्या राज्ञा कुमाराणामध्यक्षाः स्युः परीक्षिताः ॥ १४८ ॥

कर्मस्वन्येषु सर्वेषु दक्षाश्च शुचयस्तथा ।
शूराश्च बुद्धिमन्तश्च शस्त्र-शास्त्रकलाविदः ॥ १४९ ॥

योग-क्षेमप्रसिद्ध्यर्थाय दुष्टसंयमनाय च ।
आत्मनश्च विनोदाय राज्ञा योज्या यथार्हतः ॥ १५० ॥

इत्यन्तःपुररक्षक-कुमारपरिचारकलक्षणम् ॥

इत्यमात्याध्यायः ॥ २ ॥

वर्द्धते भूगुणैर्देशो देशवृद्धिर्नृपर्द्धये ।
भूमौ गुणवर्ती तस्मादावसेद् भूतये नृप ॥ १५१ ॥

---

1 B सुप्तकामोपवाः ।

सर्वसस्यवती सेव्या खनिद्रविणगर्भिणी ।
पशव्या बहुपानीया पुण्यवद्भिर्जनैर्युता ॥ १५२ ॥

स्तम्बेरमवनोपेता बहूद्याना सुशोभना ।
भूर्नदीमातृका शस्ता सर्वदा धरणीभुजाम् ॥ १५३ ॥

ईदृग्भूमियुतं राष्ट्रं महापत्तनभा[सि]तम् ।
पालनाद् वर्धयेद् राजा स्वकोशस्याभिवृद्धये ॥ १५४ ॥

स्वराष्ट्रं पालयेद् राजा प्रजाः पुत्रानिवौरसान् ।
चौरेभ्योऽमात्यकेभ्यश्च तथैवार्थाधिकारितः ॥ १५५ ॥

चौरैः साहसिकैश्चार्दैर्दुराचारैस्तथा परैः ।
विशेषेण च कायस्थैः पीडिताः पालयेत् प्रजाः ॥ १५६ ॥

स्वराष्ट्रं यो नृपो मोहात् पीडयेदनपेक्षया ।
राज्यात् स च्यवते शीघ्रं प्राणेभ्यः सह बन्धुभिः ॥ १५७ ॥

यथैव प्राणिनां प्राणा हीयन्ते देहपीडनात् ।
तथैव भूभुजां प्राणा हीयन्ते देशपीडनात् ॥ १५८ ॥

एकग्रामप्रभुं कुर्याद् दशग्रामप्रभुं तथा ।
ग्रामाणां विंशतेः कुर्यात् प्रभुं शत-सहस्रयोः ॥ १५९ ॥

ग्रामे दोषं समुत्पन्नमशक्तश्शासितुं यदि ।
दशग्रामेशिनं शंसेद् दशेशो विंशतीश्वरे ॥ १६० ॥

विंशतीशः शतेशाय तत् सर्वं विनिवेदयेत् ।
नृपाद् ग्रामशतस्वामी सहस्रस्वामिनेऽखिलम् ॥ १६१ ॥

उत्पन्नांस्तु तथा दोषान् ग्रामादाशु निवेदितान् ।
ज्ञात्वा तत्र स्थिताः सर्वे कुर्युस्तेषां प्रतिक्रियाम् ॥ १६२ ॥

इति राष्ट्रपालनविवेकः ॥

पञ्चाशत्तम आदेयो भागः पशु–हिरण्ययोः।
अष्टमो द्वादशो वाऽपि षष्ठो वा धान्यतो नृपैः॥ १६३॥

फलक्षेत्रानुरूपेण गृह्णीयात् तत्करं नृपः।
स्वीकुर्यादथ षड्भागं पण्ययोर्मधुसर्पिषोः॥ १६४॥

रस-गन्धौषधीनां च मूल-पुष्प-फलस्य च।
तृणानां शाकपत्राणां कर्मणां चर्मणामपि॥ १६५॥

मृत्तिकाकृतभाण्डानां भाण्डस्याश्ममयस्य च।
आपत्स्वपि नोऽप्याददीत श्रोत्रियाच्च करं नृपः॥ १६६॥

इति करादानविवेकः॥

भूप्रदेशमकृष्टं तु गवां चाराय कल्पयेत्।
देवोद्यानं द्रुमतिष्ठं मुनिभ्यो वितरेन्नृपः॥ १६७॥

मृगसङ्घातसम्पन्नं क्रूरसत्त्वैर्विवर्जितम्।
वनमात्मविहारार्थं पालयेत् पुरपार्श्वगम्॥ १६८॥

अत्यन्तदेशसम्भूतं वनं गिरिदरीयुतम्।
सर्वेषां गृहकृत्यर्थं पार्थिवः प्रतिपादयेत्॥ १६९॥

फलैर्मूलैस्तृणैः काष्ठैः शाकैस्तत्रोत्थितैर्नराः।
जीवन्ति ये ततो ग्राह्यो दशमोऽशो महीभुजा॥ १७०॥

द्विपजन्मवनं श्रेष्ठं वर्तमानगजं च यत्।
अटवीवर्गनिर्भिन्नैः रक्षणीयं क्षमाभुजा॥ १७१॥

इति देशान्तरक्षा॥

गङ्गासागरदेमाद्रिप्रयागाणां च मध्यतः।
वन माच्यमिति प्रोक्तं लोहिताब्धिश्च पश्चिमे॥ १७२॥

त्रिपुर्याः कोसलादौ च वैदिकाख्यकं वनम् ।
श्रीक्षेत्रे गौडवङ्गालमाङ्गिरेयं वनं स्मृतम् ॥ १७३ ॥

विन्ध्याद्रिचित्रकूटाद्रिकलिङ्गद्रविडाश्रितम् ।
वनं कालिङ्गकं नाम समुद्रावधि कीर्त्यते ॥ १७४ ॥

श्रीशैले वेदशैले च मलयाद्रौ तथैव च ।
वनं दाशार्णकं नाम करिणां जन्मकारणम् ॥ १७५ ॥

सह्याद्रिभृगुकच्छान्तमपरान्तवनं स्मृतम् ।
द्वारवत्यामवन्त्यां च सौराष्ट्रवनमुच्यते ॥ १७६ ॥

कालञ्जरे कुरुक्षेत्रे सिन्धुसागरसङ्गमे ।
वनं पाञ्चनदं प्रोक्तं हिमालयकृतावधि ॥ १७७ ॥

कालिङ्गं वैदिकाख्यं दाशार्णं च वनं वरम् ।
आङ्गिरेयं तथा प्राच्यं मध्यमं वनमिष्यते ॥ १७८ ॥

अपरान्तं पाञ्चनदं सौराष्ट्रं चाधमं वनम् ।
एवमष्ट वनान्याहुर्गजानां जन्मनः पदम् ॥ १७९ ॥

इति गजवनविभागलक्षणम् ॥

घ्नन्ति ये करिणः पापा घातयेत् तान् महीपतिः ।
दैवान्मृतेषु नागेषु तेषां दन्तान् समाहरेत् ॥ १८० ॥

करिणो मूत्र-शकृता लिप्ताङ्गैरटवीचरैः ।
अरण्यकरदलच्छन्नैर्ज्ञानीयादिभयूथकम् ॥ १८१ ॥

पदप्रचारैर्लेण्डैश्च तदाघातैर्हतद्रुमैः ।
बुध्येत शयनस्थानैर्गजास्तद्बृंहितैरपि ॥ १८२ ॥

---

१ A यत्नतो ।

पारिकर्मयुतः पादपाशजालसमन्वितः ।
करिणी-तुरगारूढैर्यन्त्रिभिर्बहुभिर्वृतः ॥ १८३ ॥

समादिष्टः क्षितीशेन करिलक्ष्मविचक्षणः ।
द्विरदान् धारयेद् ग्रीष्मे यत्नतो लक्षणान्वितान् । १८४ ॥

धारयेत् त्रिविधैर्बन्धैर्द्विपानामधिपादिभिः ।
पार्थिवेन विधातव्यः पुरुषैर्बन्धवेदिभिः ॥ १८५ ॥

पशाबन्धो वारिबन्धो बन्धश्चानुगतः परः ।
उत्तमस्त्रिप्रकारः स्याद् बन्धः करटिनामयम् ॥ १८६ ॥

आपातश्चावपातश्च द्वौ बन्धौ निन्दितौ मतौ ।
विनश्यन्ति गजा यस्मात् तस्मात् तौ परिवर्जयेत् ॥ १८७ ॥

धारस्थानं समालोक्य घासं हृद्यं ततः क्षिपेत् ।
सल्लकी-कदलीदण्डानिक्षुकाण्डान् सुधासमान् ॥ १८८ ॥

नलिनीकन्दकान् मृणान् नवान् पिप्पलपल्लवान् ।
वैणवं हरितं पत्रं तथैवान्यद् गजप्रियम् ॥ १८९ ॥

द्विपियूथं समागच्छेदार्द्रग्रासस्य लम्पटम् ।
मत्पदं दृश्यते तत्र तदा मार्गो निरुध्यते ॥ १९० ।

क्रोशमात्रायतां भूमिं विस्तारेण च तत्समाम् ।
वृक्षैः परिघया वाऽपि समन्ताद् परिवेष्टयेत् ॥ १९१ ॥

द्वारं तत्र प्रकुर्वीत निवर्तनमहीमितम् ।
कुञ्जराणां प्रवेशार्थं वारिबन्धविचक्षणः ॥ १९२ ॥

प्रविष्टान् द्विरदांस्तत्र सम्यगालोक्य बुद्धिमान् ।
वारिद्वारं निरुन्धीत महावृक्षैस्तिरस्कृतम् ॥ १९३ ॥

अन्तःस्थान् बन्धयेन्नागान् सर्वलक्षणसंयुतान् ।
ईदृग्विधस्तु यो बन्धो वारिबन्धः स उच्यते ॥ १९४ ॥

इति वारिबन्ध ॥

सम्राष्टौ वा वशा वश्या महाकाया महाजवाः ।
आरूढाः पत्रसंछन्नाः पाशहस्ताश्च हस्तिपाः ॥ १९५ ॥

करिणीनां करे पाशान् हस्तिबन्धाय दापयेत् ।
वायोरधः शनैर्गच्छेद् गजानामन्तिकं बुधः ॥ १९६ ॥

घटयित्वा वशा नागैर्बध्नीयात् तत्र कुञ्जरान् ।
एष बन्धः समाख्यातो वशाबन्धो मनोहरः ॥ १९७ ॥

इति वशाबन्धः ॥

वीक्ष्य पार्पद्धिकैर्वेलानिद्रितं गजयूथकम् ।
बहुभिः पाशहस्तैश्च कूर्चहस्तैः समावृतः ॥ १९८ ॥

शृङ्गहस्तैस्तथा कैश्चिदाराहस्तैश्च कैश्चन ।
वाद्यकैर्विविधैः सार्धं गच्छेन्मातङ्गबन्धकः ॥ १९९ ॥

अश्वारूढैर्वशारूढैर्गजारूढैर्विचक्षणैः ।
सङ्गतो गजबन्धाय गच्छेद् राज्ञा नियोजितः ॥ २०० ॥

तोयस्थानेषु सर्वेषु समीपस्थेषु शाखिषु ।
आरोपयेद् बहून् भृत्यांस्तूर्यहस्तान् विचक्षणान् ॥ २०१ ॥

निद्रावशसमापन्नं यत्र यूथं व्यवस्थितम् ।
प्रात काले शनैर्गच्छेन्निद्रान्ते समुपस्थिते ॥ २०२ ॥

सदागतैरधोभागे निवार्य जननिस्वनम् ।
सहसा वादयेत् तूर्यं काहलारवसंयुतम् ॥ २०३ ॥

उत्थाय चकितं वेगान्नागयूथं विनिद्रितम् ।
सम्भ्रान्तमानसं भीतं पलायनपरं भवेत् ॥ २०४ ॥

ततस्तदनुगच्छेयुर्वारिबन्धविशारदाः ।
येन मार्गेण सन्त्रस्तं गतं यूथं वनान्तरम् ॥ २०५ ॥

यूथं विहाय यो गच्छेद् भयसन्त्रस्तमानसः ।
तं नागमनुगच्छेयुः पाशकूर्चकधारिणः ॥ २०६ ॥

पिपासितः परिश्रान्तस्तोयान्तिकमुपागतः ।
श्रुत्वा तूर्यकृतं नादमन्यतः मपलायते ॥ ३०७ ॥

शुष्कलालाजलेऽत्यर्थं गते च जडतां गजे ।
श्लथे करे च पुच्छे च निश्चले कर्णपल्लवे ॥ २०८ ॥

ततो वेगयुता वश्या वशाश्वाधोरणेरिताः ।
श्रान्तं द्विपं समागत्य वेष्टयन्ति समन्ततः ॥ २०९ ॥

तत्र पाशधरा दक्षा वशागात्रतिरोहिता ।
निबध्नन्ति नराः शूरास्तं गात्रापरयोर्द्विपम् ॥ २१० ॥

कक्षाभागे च कण्ठे च निगडैश्चर्मनिर्मितैः ।
समीपस्थस्य वृक्षस्य स्कन्धे बध्नन्ति सिन्धुरम् ॥ २११ ॥

अनेन विधिना यत्र क्रियते गजबन्धनम् ।
स बन्धोऽनुगतो ज्ञेयो बन्धविधासु कोविदैः ॥ २१२ ॥

इत्यनुगतबन्धः ॥

नालिकेराञ्जनोद्भूतवल्कवलितपाशकम् ।
पट्टिहस्तायु(य)तं स्थौल्ये मकोष्ठसमतां गतम् ॥ २१३ ॥

तस्यार्धं निक्षिपेद् गाने पूरयेच्च दृढं मृदा ।
शेषार्धं पाशवत् कुर्याद् गजग्रीवादिरोधनम् ॥ २१४ ॥

तेन पाशेन यो बद्धः स भृशं पीडितो भवेत् ।
प्रमादोऽपि भवेद् क्वापि क्वापि जीवति कुञ्जरः ॥ २१५ ॥

आपाताख्यः समाख्यातो बन्धोऽयं हस्तिबन्धकैः ।
निन्दितश्च भवत्यष सिंहसंशयिन सदा ॥ २१६ ॥

इत्यापातबन्धः ॥

चतुर्हस्तमितं खातं विस्तरेण करद्वयम् ।
पञ्चबाहुप्रमाणेन दीर्घं कुर्वीत बुद्धिमान् ॥ २१७ ॥

गोपनीयं प्रयत्नेन यष्टिभिस्तृणपल्लवैः ।
यस्तत्र निपतेन्नागो विघ्नो यस्यापि सम्भवेत् ॥ २१८ ॥

खञ्जो वा जायते पार्श्वभग्नो वाऽस्य प्रभज्यते ।
दन्तैर्वियुज्यते वापि कोऽपि जीवति वा न वा ॥ २१९ ॥

बन्धोऽयमवपाताख्यस्तेनात्यर्थं विगर्हितः ।
यस्मान्नागाः प्रणश्यन्ति तेनैवं वर्जयेद् बुधः ॥ २२० ॥

॥ इत्यवपातबन्धः ॥

प्रबध्य कुञ्जरान् राजा तेषां लक्षणमुत्तमम् ।
अनूकसंज्ञकं सत्त्वं कुलं सम्यग् विचारयेत् ॥ २२१ ॥

सप्तारत्निप्रमुत्सेधो नवारत्न्यायतश्च यः ।
दशारत्निपरीणाहः स गजो मानतः शुभः ॥ २२२ ॥

अरत्निमात्रेणाधिक्यादरालः परिकीर्तितः ।
अत्यरालो द्व्याधिक्यान्निन्द्यौ मानाधिकाविमौ ॥ २२३ ॥

अरत्निमाने हीनो यः स मध्यो मानतो गजः ।
अरत्निद्वयहीनस्तु कनिष्ठः परिकीर्तितः ॥ २२४ ॥

कनिष्ठादपि यो हीनो वामनः स निगद्यते ।
वामनादपि यो हीनः कुब्जो निन्द्यौ गजाविमौ ॥ २२५ ॥

सुस्निग्धौ रदनौ वृत्तौ दक्षिणश्च समुन्नतः ।
अकृष्णं तालु ताम्रं च दशार्णो नखराः शुभाः ॥ २२६ ॥

अपाण्डु मेहनं शस्तं वालयुक्तश्च वालधिः ।
अच्छिद्रौ विस्तृतौ कर्णौ मधुपिङ्गविलोचने ॥ २२७ ॥

बृंहितं मेघगम्भीरं लोहितं पुष्करं वरम्।
अङ्गुल्यो वर्तुला दीर्घा गौरश्यामा तनोश्छविः ॥२२८॥

शुभं लक्षणमेतत् स्याद् गजानां जयकारिणाम्।
तस्माल्लक्षणसंयुक्ता गजा ग्राह्या महीभुजा ॥ २२९ ॥

इति गजशुभलक्षणम् ॥

अतो यदन्यत तत् सर्वं विरूपं विकृतं च यत्।
न्यूनाधिकं तु यद्रूपं तत्सर्वमशुभं विदुः ॥ २३० ॥

हीनलक्षणसंयुक्ता गजास्त्याज्या महीभुजा।
दुर्भिक्षशोकभयदा लोचनोद्वेगकारिणः ॥ २३१ ॥

गति-चेष्टा-स्वरान् यस्य सत्त्वस्यानुकरोति यत्।
अनूकमिति तद् ज्ञेयं गजचेष्टितकोविदैः ॥ २३२ ॥

शुभानां प्राणिनां चेष्टां शुभानूकं वरं हि तत्।
निन्दितानां तथा चेष्टामनूकं निन्दितं विदुः ॥ २३३ ॥

सुव्यक्ता बिन्दवो यस्य गौरो वर्णो मनोहरः।
लोहितौ नेत्रपाः प्रान्तौ स्निग्धौ च वलितौ रदौ ॥ २३४ ॥

एवं लक्षणसम्पूर्णो गजो ब्रह्मांशको मतः।
पूजार्होऽसौ नरेन्द्राणां विजयारोग्यवर्धनः ॥ २३५ ॥

कक्षाभागे तथा कण्ठे यः समः पृथुलाननः।
सुखे कोरनदच्छायो सुगरोमविराजितः । २३६ ॥

बहुकालमदः शूरो मेघनादेन हृष्यति।
प्रजापत्यंशको नाग प्रजावृद्धिकरो वरो ॥ २३७ ॥

बिन्दवो वलिरेखा वा दृश्यन्ते यस्य वर्ष्मणि।
स्वस्तिवर्धमानाब्जनन्द्यावर्तैश्च सन्निभाः ॥ २३८ ॥

रक्तोत्पलसमे नेत्रे स स्यादिन्द्रांशको गजः ।
समरे विजयं दद्यात् परभूपालसम्पदः ॥ २३९ ॥

ताम्रावोष्ठौ तथा जिह्वा धात्रीफलसमद्युतिः ।
नयने रदनौ यस्य कुमुदोदकसन्निभम् (भौ) ॥ २४० ॥

धनदांशसमुद्भूतो धनरत्नसमृद्धिकृत् ।
नृपाणां भवने तिष्ठन् पूजितः कुञ्जरोत्तमः ॥ २४१ ॥

कृष्णमेघनिभो वर्णे स्यानतविः सद्ग्रहः ।
आसने सुभगो मूर्ध्नि गम्भीरघनगर्जितः ॥ २४२ ॥

स्रवति प्रचुरं दानं वरुणांशकसम्भवः ।
आहवे रिपुसंहारी निजभर्तुर्जयप्रदः ॥ २४३ ॥

त्रिवल्लीमण्डितः कण्ठे क्षौद्रपिङ्गविलोचनः ।
केतकच्छायदशनः पृथुरक्ताग्रपल्लवः ॥ २४४ ॥

बिन्दुमान् पाण्डुवर्णश्च शशाङ्कांशकसम्भवः ।
सङ्गरमाङ्गणे राज्ञां गजोऽयं विजयप्रद. ॥ २४५ ॥

अग्निज्वालासदृग्रोमा केशवालेषु पिङ्गलः ।
पिङ्गाक्षः पिङ्गतालुश्च पिङ्गपुष्करशोभितः ॥ २४६ ॥

अग्न्यंशकसमुद्भूतः साक्षाद् वह्निरिवाहवे ।
भस्मसात् कुरुते सैन्यमशेषं द्विषतां सदा ॥ २४७ ॥

कृष्णा यस्य तनोश्छाया गौरी चाक्ष्णोश्च कर्णयोः ।
नखा दीपशिखाभासा निबिडा मांसला तनुः ॥ २४८ ॥

अग्नि-मारुतयोरंशसंजातः कोपनो जवी ।
तस्य दोषोऽयमेकः स्यादङ्कुशं यन्न मन्यते ॥ २४९ ॥

दोषाभासो गुणस्तस्य सञ्जाते समरोत्सवे ।
प्रचण्डत्वाद् भयं धत्ते रिपुसैन्येष्वयं गजः ॥ २५० ॥

दन्तमध्यात् समारभ्य क्रमशो हीयते करः ।
ताम्रपुष्करपर्यन्तं सुप्रमाणायताङ्गुलीः ॥ २५१ ॥

सुगन्धिः सीकरासारो दीर्घा निश्वाससन्ततिः ।
घनवद्बृंहितध्वानो वलीहीनं वपुर्दृढम् ॥ २५२ ॥

मृदु सूक्ष्माञ्जनश्यामं सर्वाङ्गीणं तनूरुहम् ।
श्रीगर्भपुष्करच्छाया कान्तिः सर्वाङ्गसङ्गिनी ॥ २५३ ॥

सुवर्णकेतकीद्योतौ रदनौ वर्तुलौ दृढौ ।
आयतः प्रोन्नता मध्ये निम्नः स्याद् वारकुम्भकः ॥ २५४ ॥

अपीनरोमवानोष्ठः सगण्डे च समे शुभे ।
मुखमण्डलमत्यर्थं रम्यं दृष्टिमनोरमम् ॥ २५५ ॥

पुष्पसारसमे नेत्रे पक्ष्मले प्रान्तलोहिते ।
वलिनौ मृदुविस्तीर्णौ समौ छेदविवर्जितौ ॥ २५६ ॥

शिराविरहितौ कर्णतालौ दुन्दुभिनिस्वनौ ।
वर्तुलावुन्नतौ कुम्भौ समौ लक्ष्मीकुचोपमौ ॥ २५७ ॥

रम्यौ भालतलन्यासौ विपुलं चासनं समम् ।
कञ्जुह्रस्वो गलादेशो दीर्घांसौ च मांसलौ ॥ २५८ ॥

बाहू दीर्घावृजू पीनावधोऽग्र क्रमशः कृशौ ।
कूर्माकारतलाश्लिष्टा स्निग्धार्धेन्दुनिभा नखाः ॥ २५९ ॥

विंशतिर्वा दशाष्टौ वा शोभनाः परिकीर्तिताः ।
उरो विशालमुद्बद्धमुदरं मतनौ कुक्षौ ॥ २६० ॥

अप्रस्लं मेहनं शस्तं वराहजघनं वरम् ।
सज्जचापनिभो वंशो बालधिश्चायतः कृशः ॥ २६१ ॥

शङ्खचक्रगदाखड्ग बिन्दवो वलयोऽथवा ।
दृश्यन्ते यस्य नागस्य स विष्ण्वंशसमुद्भव ॥ २६२ ॥

अभिषेकोचितः पूज्यः सर्वकार्यप्रसाधकः ।
पुनाति रत्नदो राष्ट्रं धनधान्यसमृद्धिकृत् ॥ २६३ ॥

शुच्याहाररतो नित्यं वलिरेखाविवर्जितः ।
अनामयः स्थिरः शूरो देवसत्त्वो भवेद् गजः ॥ २६४ ॥

मेधावी वै क्रियादक्षः कामुकश्चपलः पटुः ।
स्तम्भप्रेक्षणके शस्तो गजो गन्धर्वसत्त्वजः ॥ २६५ ॥

जलावगाहनासक्तः कोपनः कातरो भृशम् ।
भोजने लम्पटो नित्यं कुञ्जरो विप्रसत्त्वजः ॥ २६६ ॥

दान्तः शूरः सदोत्साहो बली युद्धविशारदः ।
अभीरुराहवे धीरः क्षत्रसत्त्वो भवेद् द्विपः ॥ २६७ ॥

दण्डसाध्यस्तथा नीचो मूर्खश्च मलिनाशनः ।
आहवे निरतः शूरः शूद्रसत्त्वो भवेत् करी ॥ २६८ ॥

विश्वासघातकः क्रूरो गमने कुटिलक्रमः ।
न शृङ्खले च मदेऽस्पर्धी सर्पसत्त्वः करी मतः ॥ २६९ ॥

एतानि त्रीणि सत्त्वानि राजसस्य भवन्ति हि ।
राजसः पित्तभूयिष्ठः पित्तलस्तप्तविग्रहः ॥ २७० ॥

उन्मार्गेण सदा याति विवेकरहितो भृशम् ।
उन्मत्त इव चेष्टायां द्विपः पैशाचसत्त्वजः ॥ २७१ ॥

निशायां चरति स्वैरं मनुष्याणां वधे रतः ।
वेगवान् सबलो हस्ती रक्षःसत्त्वसमुद्भवः ॥ २७२ ॥

एते द्वे तामसे सत्त्वे तामसो वातलो भृशम् ।
सवातो दृश्यते रूक्षो निद्रालुश्चपलो गजः ॥ २७३ ॥

जायते पाण्डुरो यस्तु केशे रोमणि वालधौ ।
वर्णे च नेत्रयोश्चैव स स्यादैरावतान्वयः ॥ २७४ ॥

युद्धक्षमः सारमदृक् कोपी युद्धविशारद ।
कुञ्जरोमा स्थूलशीर्षः पुण्डरीकान्वयो गजः ॥ २७५ ॥

श्यामवर्णः मृदेहश्च कृष्णकेशः कृशोदरः ।
स्थूलबिन्दुर्दृढनुर्वंशः पुष्पदन्तान्वयः करी ॥ २७६ ॥

अग्निवर्णः सुवर्णाक्षो वेगवान् जललम्पट ।
आयतो विस्तृतोऽन्यर्थे वामनान्वयजो द्विपः ॥ २७७ ॥

प्रचण्डः कुमुदच्छायः कपोतनयनः शमी ।
मेधावी तनुरोमा च सुप्रतीकान्वयो गजः ॥ २७८ ॥

स्निग्धवालधिदन्तो यश्चेतोहरकरान्वितः ।
उन्नतस्थूलजघनः सोऽञ्जनान्वयसम्भवः ॥ २७९ ॥

रौद्र पृथुशिरा ह्रस्वश्रोत्रहस्तसमन्वितः ।
पेचकेऽल्पः स्थूलकलः सार्वभौमान्वयो गजः ॥ २८० ॥

कुमुदाभ स्थूलतनुः स्निग्धलोहितलोचनः ।
कृष्णविस्तीर्णहस्ताग्रः कुञ्जरः कुमुदान्वयः ॥ २८१ ॥

इति गजजातिभेदलक्षणम् ॥

एवं परीक्ष्य यत्नेन लक्षणैरुत्तमान गजान् ।
स्वीकुर्यादवनीपालो विपरीतान परित्यजेत् ॥ २८२ ॥

स्वीकृताननुबद्धांस्तान सिन्धुरान् शिक्षयेन्नृप. ।
अवधेऽथ वधे कर्म वाक्पदाङ्कुशभङ्गिभिः ॥ २८३ ॥

शुभे दिने शुभे क्षेत्रे सौम्याशामम्मुखं गजम् ।
प्रातः कृत्वा द्विजश्रेष्ठान् मन्त्रसामा निवाचरे(ये)त् ॥ २८४ ॥

१ A कृष्णं ।

दधि दूर्वाक्षतैः पुष्पैश्चन्दनैः कुङ्कुमादिभिः ।
अर्चयेत् सिन्दुरं राजा सम्यग् दिनचतुष्टयम् ॥ २८५ ॥

ततश्चासौ स्मरेज्जन्म सामजन्मा मतङ्गजः ।
अभिनन्दन् गृहावासं त्यजन् कान्तारजं सुखम् ॥ २८६ ॥

उत्तमेऽहनि नागानामपराणि प्रबन्धयेत् ।
निगडैश्चर्मनिर्माणैर्दृढं गाढं यथासुखम् ॥ २८७ ॥

पुरोभागे नयं स्थाप्यं कर्णदेशे नरावुभौ ।
पश्चाद्भागे तथा द्वौ च सक्षाराधारिणः क्रमात् ॥ २८८ ॥

पक्षयोरुभयोः स्थाप्ये करिण्यावतिशिक्षिते ।
आरोहस्तैस्ततः सर्वैर्नियम्योऽसौ मतङ्गजः ॥ २८९ ॥

शिक्षयेच्च ततो भाषां कर्मज्ञानाय दन्तिनम् ।
अनालस्येन निर्बन्धात् प्रत्यहं गजपोषकः ॥ २९० ॥

एह्येहीति च सञ्चाले स्थितावप्यपसारणे ।
हेट्टे हेट्टेति वक्तव्यं गजशिक्षाविशारदैः ॥ २९१ ॥

पार्श्वद्वयापसारे च फापेति विनियोजयेत् ।
उपवेशे प्रयोक्तव्यं विम्भीति वचनं स्फुटम् ॥ २९२ ॥

तुङ्गुत्थापने वाच्यं गजशिक्षाविशारदैः ।
द्विर्वाच्यं करसङ्कोचे वप(पृ) डिहरेति शिक्षकैः ॥ २९३ ॥

भरोहेति प्रयोज्यं हि करस्योत्क्षेपणं प्रति ।
स्तम्भादिलगने वाच्यं हिञ्ज-हिञ्जेति शिक्षकैः ॥ २९४ ॥

गात्रस्योत्क्षेपणे वाच्यं भले भलेति यन्त्रिभिः ।
अपरानमने किः किर्भणनीयं विचक्षणैः ॥ २९५ ॥

याचनार्थं महामात्रा दे दे शब्दमुदीरयेत् ।
करप्रहारणे शिक्ष्यो हेहेयेति द्विरुक्तितः ॥ २९६ ॥

कवलग्रसने द्विर्द्विर्वाच्यद् ग्रामो निर्गीर्यते ।
परित्यागे प्रयोक्तव्या चुरु चुरुदेति भारती ॥ २९७ ॥

मा मा निवारणे वाच्यो गजशिक्षाविशारदैः ।
दिग हिंगेति[1] वक्तव्यो भूमौ दन्ताभिघातने ॥ २९८ ॥

बहिः शुण्डाभिघाते तु हू हू वाक्यं प्रबोधयेत् ।
शनैः सञ्चारणे वाच्यो लेच लेचेति कोविदैः ॥ २९९ ॥

आह्वाने कुञ्जरो ज्ञाप्य इच्च भूभेति यन्त्रिभिः ।
कस्यापि ग्रहणे वाच्यो घे घे शब्दं मतङ्गजः ॥ ३०० ॥

ईदृशी प्रथमा भाषा शिक्षयेत मतङ्गजम् ।
भाषाभिज्ञं गजं जातं पश्चात्कर्मणि योजयेत् ॥ ३०१ ॥

पुरःस्थितेन शुण्डाया नारदो(आरतो)दः शनैः शनैः ।
कर्तव्यस्तद्भयान्नागः करं सङ्कोच्य तिष्ठति ॥ ३०२ ॥

आराभ्यां मुखपार्श्वस्थौ तुदतो हनुयुग्मकम् ।
उन्नमय्य मुखं नागस्तद्भयादवतिष्ठते ॥ ३०३ ॥

ततः कर्णसमीपस्थः कर्णमूले प्रतोदनम् ।
कुरुतस्तद्भयाद् दन्ती कर्णावुद्वृत्य तिष्ठति ॥ ३०४ ॥

आराघातभयत्रस्तो यदि पश्चाद् व्रजेद् गजः ।
आराभ्यां तोदनं तस्य कुर्वाते पार्श्वसंस्थितौ ॥ ३०५ ॥

ततः स्थानकर्मसिद्धः सौष्ठवं लभते गजः ।
शिक्षयेत ततो नागं यन्त्रितं सर्वकर्मसु ॥ ३०६ ॥

ततः कर्मकरो दक्षः पाणिभ्यां धृतमल्लिकः ।
स्थानके तिष्ठतस्तस्य प्रविश्य करिणोऽग्रतः ॥ ३०७ ॥

---

[1] A गिह गिहेति.

आस्फाल्य भल्लिके पूर्वं दर्शयेदेकभल्लिकाम् ।
हूहूकारैर्द्विपं यन्ता भल्लिकाहनने नुदेत् ॥ ३०८ ॥

करं कुण्डलिनं नागः प्रसार्य धृतभल्लिकाम् ।
प्रहरेद् बाह्यहस्तेन प्रेरितः सन्निपादिना ॥ ३०९ ॥

हस्तमुत्क्षिप्य नागेन्द्रं यन्ता वाक्यैः सुशिक्षितैः ।
अन्तःकरेण भल्लायां ताडनं कारयेद् दृढम् ॥ ३१० ॥

पार्श्वद्वयसमायुक्तौ ततः कर्मकराबुभौ ।
भल्लिकापाणिकौ नागमास्थानं प्रति कर्षतः ॥ ३११ ॥

बाह्यहस्तेन तत्रैकां भल्लिकां ताडयेद् गजः ।
अन्तर्हस्तेन चाप्यन्यां प्रहरेत पुनः पुनः ॥ ३१२ ॥

क्रमेणानेन तिष्ठन्ति भल्लिकापाणयस्त्रयः ।
चत्वारः पञ्च वा दक्षा दर्शयन्त स्वभल्लिकाः ॥ ३१३ ॥

अन्तर्हस्तेन तत्रैकां बाह्यहस्तेन चापराम् ।
प्रहारयेत् तमारूढो भल्लिकास्ता यथाक्रमम् ॥ ३१४ ॥

ततः प्रहरणे दक्षो भवेन्मातङ्गकुञ्जरः ।
पश्चात् प्रहरतेऽङ्गानि नरोष्ट्र-गज-वाजिनाम् ॥ ३१५ ॥

ततोऽङ्गधारणैः शिक्षयस्तज्ज्ञैः कर्मकरैः करी ।
ग्रासं चेष्टं गुडं शालिमिक्षुकाण्डमथापि वा ॥ ३१६ ॥

दर्शयित्वा प्रलोभ्यैनं प्रसारितकरं गजम् ।
विवेष्टयेत्रिजं गात्रं ग्रासलोभं प्रदर्शयेत् ॥ ३१७ ॥

करेण वेष्टितो गाढं दद्याद् ग्रासं करस्थितम् ।
आस्फाल्य च करं तस्य स्वयमुद्धृत्य गच्छति ॥ ३१८ ॥

धारणे विगताशङ्कं धारयेल्लोचनैर्विना ।
स्वाङ्गं च विधृतं यत्नाद् वञ्चयेत् परिवर्तनैः ॥ ३१९ ॥

ततोऽङ्कुशेन संरुद्धः प्रतोदेन च पीडितः।
हिग हिगेति संप्रोक्तो धृत्वा कर्मकरं दृढम्॥ ३२०॥

मुखं निक्षिप्य भूभागे मोहादाकुञ्च्य तिष्ठति।
हस्तेन वेष्टयेदङ्गं कर्मकारस्य कुञ्जरः॥ ३२१॥

पश्चाद् चर्मविनिर्माणं प्रतिरूपं निराकृतिः।
निक्षिपेदग्रहस्तस्य कुञ्जरस्य वधैषिणः॥ ३२२॥

ततः शुण्डाभिघातेन दन्ताग्रव्यधनेन च।
गात्राभ्यामपराभ्यां च मर्दनेन च पेषणैः॥ ३२३॥

चूर्णीकरोति तद्रूपं वधकर्मणि शिक्षितः।
ततोऽसौ मारयेज्जन्तून् कृतान्त इव शिक्षितः॥ ३२४॥

चतुरस्रं कर्मकृत्स्नं वालुकापूरितं मनाक्।
दण्डाग्रसंस्थितं कार्यं तल्लक्षेत्यभिधीयते॥ ३२५॥

दण्डाग्रे दर्शयेल्लक्षं कम्पयेच्च सशब्दकम्।
निषादिप्रेरितो नागो रदनाभ्यां निहन्ति तम्॥ ३२६॥

समुन्नतैस्तथा नीचैर्यैः पार्श्वसमाश्रितैः।
विविधैः प्रहरेल्लक्षं दन्तघातेषु शिक्षितः॥ ३२७॥

उन्मोच्य बन्धनं पश्चात् पूर्वस्थानकमाश्रितम्।
सञ्चारयेत् ततो वीथ्यामङ्गुष्ठाभ्यां तुदन् गजम्॥ ३२८॥

कवलं दर्शयित्वा तु धावयेत्तु धावतः।
पार्श्वाभ्यां वर्तनैः पश्चान्मण्डलेषु प्रचारयेत्॥ ३२९॥

एवं संशिक्षितो नागो वध्यावध्येषु कर्मसु।
जयत्येकोऽपि सङ्ग्रामे नर-वाजि-गजान् बहून्॥ ३३०॥

शुभलक्षणसंयुक्ताः कुञ्जरा भद्रजातयः।
शिक्षिताः सर्वकर्माणि बले कार्या महीभुजा॥ ३३१॥

इति गजशिक्षानिरूपणम्॥

रजतस्य सुवर्णस्य रत्नानां रक्षयेत् खनिम् ।
तत्सम्भूतेषु सर्वेषु करं राजा समाहरेत् ॥ ३३२ ॥

द्रव्यं भूमिगतं विद्याद् विविधैर्लक्षणैर्नृपः ।
लक्षणानि प्रवक्ष्यामि निधीनां प्रतिपत्तये ॥ ३३३ ॥

वर्षासु शीतकाले च यत्र गोधा निरन्तरम् ।
वृश्चिकः पन्नगो वाऽऽस्ते तत्र भूमौ भवेन्निधिः ॥ ३३४ ॥

दृश्यते खञ्जरीटानां सम्भोगो यत्र भूतले ।
निरिन्धनो ज्वलेद् वह्निर्ध्रुवं तत्र भवेन्निधिः ॥ ३३५ ॥

आवर्तो दृश्यते यत्र विना हेतुं जलाशये ।
पङ्कजानि द्विशीर्षाणि तत्र तोये भवेन्निधिः ॥ ३३६ ॥

अप्ररोहस्य वृक्षस्य प्ररोहो यत्र दृश्यते ।
रम्भा कण्टकिनी यत्र भूमौ तत्र भवेन्निधिः ॥ ३३७ ॥

शिखाद्वितयसंयुक्तस्तालो यत्र प्रदृश्यते ।
पुष्पस्योपरि पुष्पं वा क्षितौ तत्र भवेन्निधिः ॥ ३३८ ॥

दृष्ट्वाऽर्कं भुवमाघ्राय वृषभो यत्र नर्दति ।
वारं वारं प्रहृष्टात्मा क्षोण्यां तत्र भवेन्निधिः ॥ ३३९ ॥

हस्तद्वयसमुत्सेधो बाष्पो यत्रानिमित्तकः ।
रूढिर्वा लौकिकी यत्र निधिं तत्र खनेन्नृपः ॥ ३४० ॥

खनिशास्त्रेषु सर्वेषु लक्षणेन निरूप्यते ।
तत्रापि लक्ष्यते तज्ज्ञैर्निधिर्विध्युक्तमार्गतः ॥ ३४१ ॥

लक्षणैर्व्यञ्जिते द्रव्ये स्थाननिश्चयहेतवे ।
अस्ति नास्तीति शङ्काया निवृत्त्यै वर्तिरुच्यते ॥ ३४२ ॥

उलूकस्य वसाङ्कोलतैलं कमलतन्तवः ।
एतैर्विहितया वर्त्या कज्जलं परिकल्पयेत् ॥ ३४३ ॥

कज्जलेनाञ्जयेत् तेन लोचने प्रयतो नरः।
करस्थमिव भूमिस्थं निधिं पश्यति निश्चितम् ॥ ३४४ ॥

सितार्कतूलकस्यापि पद्मसूत्रविवेष्टितम्।
सप्तकृत्वो वराहस्य वसया परिभावितम् ॥ ३४५ ॥

कपिलासर्पि(?)दीप्तं च कज्जलं जनयेद् यदा।
तत्कज्जलाक्तनयनो निधिं पश्येद् भुवि स्थितम् ॥ ३४६ ॥

हृदयं कृष्णकाकस्य जिह्वां चादाय पेषयेत्।
अञ्जयेन्मधुना सार्द्धं नेत्रे पश्येत् ततो निधिम् ॥ ३४७ ॥

रात्रौ कृष्णचतुर्दश्यामुलूकवमयोक्षिताम्।
पद्मसूत्रकृतां वर्ति कज्जलार्थं प्रदीपयेत् ॥ ३४८ ॥

तेनाञ्जिताक्षियुगलो गृध्रदृष्ट्याऽवलोकयेत्।
गर्वर्यौ वीक्षते वाढ निधिं भूमितलस्थितम् ॥ ३४९ ॥

तुनटी गन्धर्वं तालं यवासस्य च रेण्डिका।
पद्मसूत्रार्कतूलेन[1] वर्त्तिभिस्तैः[2] प्रकल्पयेत् ॥ ३५० ॥

कपिलासर्पिषा दीप्ता वर्त्तिर्निधिसमीपगा।
उत्पतेत् सुस्फुटे द्रव्ये निपतेत् सा महानिधौ ॥ ३५१ ॥

अर्क-शाल्मलि-कार्पास-तूलकल्पिततन्तुभिः।
पट्ट-पङ्कजसूत्रैश्च वेष्टयेच्छिखिन शिखाम् ॥ ३५२ ॥

महानिलैःप्रदीप्ता सा निधिस्थाने प्रदर्शिता।
त्रिशिखा जायते सद्यो निपतेद् वा निधिस्थले ॥ ३५३ ॥

एवं ज्ञात्वा निधिस्थानं पुष्प-धूपाक्षतैः फलैः।
यथायोग्यं च बलिभिः पूजयेद् त्रिदिवौकसः ॥ ३५४ ॥

---

१ B 'तूले च। २ B 'मेरा। ३ B प्रस्फुटे। ४ B पत्र'। ५ B 'तैल।

श्रीधरं च श्रिया युक्तमुमया च महेश्वरम् ।
ब्रह्माणं च सरस्वत्या सहितं पूजयेद् बुधः ॥ ३५५ ॥

गणेशं च गणैः सार्द्धं तत्स्थानाधिपतिं तथा ।
भूतवेतालसहितं क्षेत्रपालं च पूजयेत् ॥ ३५६ ॥

धनेशं यक्षसङ्घातपरिवारसमन्वितम् ।
जलस्थाने विशेषेण वरुणं च प्रपूजयेत् ॥ ३५७ ॥

त्रिभिर्वा पञ्चभिर्वापि सप्तभिर्नवभिस्तथा ।
अधिकैर्विषमैर्वाऽपि साधकैः खनकोत्तमैः ॥ ३५८ ॥

उपोषितैः शुचिर्भूतैः शक्तैर्भयविवर्जितैः ।
खन्यशास्त्रानुसारेण निजाङ्गक्षतरक्षणैः ॥ ३५९ ॥

समुद्धरेन्निधिं राजा निजाप्यक्षपुरःसरम् ।
एवं सिध्यन्ति सर्वाणि निधानानि न संशयः ॥ ३६० ॥

धनानामीश्वरो राजा ब्रह्मणा परिकल्पितः ।
भूगतानां विशेषेण यतोऽसौ वसुधाधिपः ॥ ३६१ ॥

इति निधि ॥

मौक्तिकानां समुत्पत्तिः स्थाने स्थाने महोदधौ ।
तानि स्थानानि संरक्षेदाहरेच्च ततो धनम् ॥ ३६२ ॥

विचित्ररत्नगर्भस्य नानारत्नौघसद्मनः ।
शरदभ्रप्रतीकाशतरङ्गोल्लासभासिनः ॥ ३६३ ॥

अपरीकृतगीर्वाणनिवहस्य सुधारसैः ।
वडवाग्निशिखाजालैर्निरुत्ताहिफणामणेः ॥ ३६४ ॥

१ B खनि॰।

इन्द्रनीलनिभोत्तुङ्गतरङ्गालिङ्गितं वपुः ।
बिभ्राणस्येन्दिराभर्तुर्विश्रम्भस्वापसद्मनः ॥ ३६५ ॥

वज्रपातभयत्रस्तकुलाचलकुक्षिस्थितैः ।
रत्नौघदीप्तिसम्मिश्रफेनस्यातिवितन्वतः ॥ ३६६ ॥

सुधासूतिकलादानात् कृतार्थीकृतशूलिनः ।
पातालमूलपर्यन्तसम्प्राप्तजलधारिणः ॥ ३६७ ॥

मत्स्यग्रविद्रुमलतासन्दिग्धौर्वानलत्विषः ।
शङ्कैश्च वडबावह्निभूतिभ्रान्तिं वितन्वतः ॥ ३६८ ॥

उल्लसद्भिर्जलेभानां वृन्दैः फेनलवोज्ज्वलैः ।
आकुलस्य गिरेः शृङ्गैर्मैनाकस्येव राजतः ॥ ३६९ ॥

अनन्तत्वान्महत्त्वाच्च बिभ्रतो गगनोपमाम् ।
उद्दामस्फुरितोत्तुङ्गतरङ्गत्रासकारिणः ॥ ३७० ॥

पक्षच्छेदभयायातभूभृद्रक्षाविधायिनः ।
उपमां बिभ्रतः साक्षात् सोमेश्वरमहीभुजः ॥ ३७१ ॥

ऐरावत–सुधा–लक्ष्मी–शीतदीधितिजन्मनः ।
शयनस्य हरेस्तुङ्गभङ्गव्याप्तवियद्दिशः ॥ ३७२ ॥

पारिजातं सुधां लक्ष्मीं वारुणीं शीतदीधितिम् ।
दत्त्वा त्रिजगतो भावान् सम्प्राप्तस्य वदान्यताम् ॥ ३७३ ॥

वेलापुरेषु सर्वेषु समीपस्थेषु वारिधेः ।
रक्षा विधेया यत्नेन राज्ञा सम्पदमिच्छता ॥ ३७४ ॥

निजवेलातटस्थानां पोतवाहनकर्मणाम् ।
पोते भग्नागते तस्माद् दशमांशं हरेन्नृपः ॥ ३७५ ॥

परीपमारुनानीतपोतानां स्वेच्छया नृपः ।
स्वीकुर्यात् सकलं द्रव्यं किञ्चिद् दद्याच्च भूपतिः ॥ ३७६ ॥

इति राज्ञाध्यायः ॥ २ ॥

धातुवादप्रयोगैश्च विविधैर्वर्धयेद् धनम् ।
ताम्रेण साधयेत् स्वर्णं रौप्यं वङ्गेन साधयेत् ॥ ३७७ ॥

शुष्कपुष्पपलाशस्य पुष्पं संशोष्य चूर्णयेत् ।
छागदुग्धेन तच्चूर्णं त्रीन् वारान् परिभावयेत् ॥ ३७८ ॥

वङ्गपत्रांशचूर्णेन पिष्टेनैतत प्रलेपयेत् ।
पुटपाकेन तद् दग्धं तारं भवति शोभनम् ॥ ३७९ ॥

श्वेतब्रह्मतरोः पुष्पं स्वरसेन विभावयेत् ।
तालं द्वात्रिंशतं वारान् तेन वङ्गं प्रलेपयेत् ॥ ३८० ॥

पुटपाकेन तद् दग्धं वङ्गं व्रजति तारताम् ।
मार्दवं कालिमां गन्धं वङ्गं त्यजति निश्चितम् ॥ ३८१ ॥

श्वेतब्रह्मतरोर्बीजतैलेन परिभावयेत् ।
गन्धकं सप्तकृत्वोऽथ तेन ताम्रदलानि च ॥ ३८२ ॥

लेपितं तत्पुटे दग्धं शुल्वं काञ्चनतां व्रजेत् ।
दाहच्छेदनिघर्षादिकर्मयोग्यं भवेत् ततः ॥ ३८३ ॥

तस्य तैलेन दरदं गन्धकं पारदं तथा ।
मर्दयेत् स्वल्पपाषाणे यावत् तत् कल्कतां व्रजेत् ॥ ३८४ ॥

लेपयेत् तेन कल्केन वङ्गपत्राणि सर्वतः ।
दग्ध्वा दग्ध्वा पुनर्लिम्पेद् वारान् द्वात्रिंशतं बुधः ॥ ३८५ ॥

ततो वङ्गं भवेत् स्वर्णं रञ्जितं दरदादिभिः ।
व्यवहारक्षमं शुद्धं कर्मयोग्यं भवेच्च तत् ॥ ३८६ ॥

निर्यासं शाकवृक्षस्य श्लक्ष्णवस्त्रेण गालयेत् ।
समूलशिग्रुचूर्णेन निर्यासससहितेन च ॥ ३८७ ॥

परितस्ताम्रपत्राणि दग्ध्वा दग्ध्वा विलेपयेत् ।
दाहैः पञ्चभिरेतत् तु काञ्चनं जायते शुभम् ॥ ३८८ ॥

फलानि शाकवृक्षस्य पक्वान्यादाय भावयेत् ।
तद्रसेन रसेनापि मञ्जिष्ठासहितेन च ॥ ३८९ ॥

तेन कल्केन पत्राणि शुल्वजानि प्रलेपयेत् ।
दहेच्च पुटपाकेन यावद् भवति काञ्चनम् ॥ ३९० ॥

सञ्चूर्ण्य वल्कं शाकीयं तद्रसेन विभावितम् ।
करवीररसैर्युक्तं तेन पत्रं निलेपितम् ॥ ३९१ ॥

ताम्रं तज्जायते तारं पुटपाके प्रतापितम् ।
गारोत्तारं भवेत् सम्यग्व्यवहारक्रियोचितम् ॥ ३९२ ।

एवमादिभिरन्यैश्च वादग्रन्थक्रियाक्रमैः ।
कारयेत् कनकं तारं धनवृद्ध्यै नराधिपः ॥ ३९३ ॥

सुवर्णे रजतै रत्नैर्वस्त्रैराभरणैस्तथा ।
पूर्णो व्ययसहः कार्यः कोशो नित्यं महीभुजा ॥ ३९४ ॥

इति धातुवाद-रसायनम् ॥

पुटीकृत्यानले तप्तं यत् स्वर्णं निरुपद्रवम् ।
तत् स्यात् षोडशवर्णाख्यं कोशे स्थाप्य तदेव हि ॥ ३९५ ॥

बालार्कद्युतिसङ्काशं विद्युद्दीप्तिसमप्रभम् ।
शुद्धं भूषणयोग्यं स्यात् त्रिदशानां महीभुजाम् ॥ ३९६ ॥

कृतं वा निष्करूपेण घनं वा पिण्डरूपकम् ।
भूषणत्वेन वा सिद्धं शुद्धं कोशे विधारयेत् ॥ ३९७ ॥

धर्मस्यार्थस्य कामस्य साधकं जनरञ्जनम् ।
शुद्धं सुवर्णकोशस्स्यमायुर्लक्ष्मीप्रदं भवेत् ॥ ३९८ ॥

---

१. A ०त्मवै. ।

धात्वन्तरसमायुक्तमशुद्धं नैव धारयेत्।
अशक्तं स्वर्णकार्येषु गृहलक्ष्मीविनाशकम् ॥ ३९९ ॥

नागेन मिश्रितं रौप्यं वह्निना परिशोधितम्।
चन्द्रमण्डलसङ्काशं कोशे स्थाप्यं महीभुजा ॥ ४०० ॥

यशःसौभाग्यजननं [1]श्रेष्ठपुत्रप्रदायकम्।
गृहे विधारितं रौप्यं मलिनं चासुखप्रदम् ॥ ४०१ ॥

रत्नानि धारयेत् कोशे शुद्धानि गुणवन्ति च।
सम्भवं च तथा जातिं गुणं तेषां परीक्ष्य च ॥ ४०२ ॥

कृते युगे कलिङ्गेषु कोसले वज्रसम्भवः।
हिमालये मतङ्गाद्रौ त्रेतायां कुलिशोद्भवः ॥ ४०३ ॥

पौण्ड्रके च सुराष्ट्रे च द्वापरे या च सन्ततिः।
वैरागरे च सोपारे कलौ हीरकसम्भवः ॥ ४०४ ॥

गुणाः पञ्च समाख्याता दोषाः पञ्च प्रकीर्तिताः।
छायाश्चतस्रो विज्ञेया वज्राणां रत्नकोविदैः ॥ ४०५ ॥

षट्कोणत्वं लघुत्वं च समाष्टदलता तथा।
तीक्ष्णाग्रता निर्मलत्वमिमे पञ्च गुणाः स्मृताः ॥ ४०६ ॥

मलो बिन्दुस्तथा रेखा त्रासः काकपदं च यत्।
एते दोषाः समाख्याताः पञ्च वज्रेषु कोविदैः ॥ ४०७ ॥

श्वेता रक्ता तथा पीता कृष्णा छाया [2]चतुर्विधा।
विप्रक्षत्रियवैश्यानां शूद्रजातेर्यथाक्रमम् ॥ ४०८ ॥

यज्ञैर्दानैस्तपोभिश्च यदाप्नोति तदाप्नुयात्।
गुणयुक्तस्य वज्रस्य विप्रजातेर्विधारणात् ॥ ४०९ ॥

---

१ A B श्रेष्ठं। २ B तथाविधा।

जयः पराक्रमस्तस्य शत्रुनाशश्च जायते ।
गुणवत् क्षत्रजातीयं वज्रं वसति यद्गृहे ॥ ४१० ॥

कलाकुशलता द्रव्यं मज्ञा क्षेम यशो महत् ।
गुणिनः पविरत्नस्य वैश्यजातेर्विधारणात् ॥ ४११ ॥

परोपकारिता दाक्ष्यं धनधान्यसमृद्धयः ।
गुणयुक्तस्य वज्रस्य शूद्रजातेर्विधारणात् ॥ ४१२ ॥

मले मलिनता ख्याता धारणाद् दंष्ट्रिणो भयम् ।
कोणे व्याधिभयं प्रोक्तं मध्ये वह्निभयं भवेत् ॥ ४१३ ॥

दोषेषु बिन्दुरावर्तः परिवर्तो यवाकृतिः ।
चतुर्विधं समाख्याता बिन्दवो वज्रसंश्रयाः ॥ ४१४ ॥

रक्तोऽत्र वर्तुलो बिन्दुरावर्तः सव्यवर्तनः ।
रक्तश्च परिवर्तस्तु रेक्त एवापसव्यकः ॥ ४१५ ॥

बिन्दुरापुर्धनं हन्यादावर्तो भयमादिशेत् ।
परिवर्ते भवेद् व्याधिर्यवे तु फलमुच्यते ॥ ४१६ ॥

स च रक्तस्तथा पीतः श्वेतश्च त्रिविधो मतः ।
रक्तवर्णे यवे ख्यातं गजाश्वस्य विनाशनम् ॥ ४१७ ॥

यवे पीते कुलस्यान्तो धनमायुः सिते भवेत् ।
एवं दोषा गुणाश्चोक्ता यवबिन्दोरशेषतः ॥ ४१८ ॥

सव्यवक्रा शुभा रेखा वामवक्रा भयङ्करी ।
छेदभ्रान्तिकरी छेदा रेखा शस्त्रभयप्रदा ॥ ४१९ ॥

पक्षद्वयप्रदृश्या या छेदगा सा प्रकीर्तिता ।
रेखा बन्धुविनाशाय जायते वज्रसंश्रिता ॥ ४२० ॥

१ B एवं सव्याप° ।

शूकः काकपदाकारो दृश्यते यः पत्रौ स्थितः।
स मृत्युमादिशत्याशु धनं वा सकलं हरेत् ॥ ४२१ ॥

भग्नाग्रं भग्नमध्यं च दलहीनं च वर्तुलम्।
कान्तिहीनं च यद् वज्रं दोषाय न गुणाय तत् ॥ ४२२ ॥

भिन्नभ्रान्तिकरत्रासः सन्त्रासं जनयेत् स्फुटम्।
एवं दोषा गुणाः मोक्ता वज्राणां सोमभूभुजा ॥ ४२३ ॥

इति वज्रदोष-गुणाः ॥

कोलाहि-करि-मत्स्यानां शीर्षे मुक्ताफलोद्भवः।
त्वक्सार-शुक्ति-शङ्खानां गर्भे मुक्ताफलोद्भवः ॥ ४२४ ॥

धाराधरेषु जायेत मौक्तिकं जलबिन्दुभिः।
दुर्लभं तन्महारत्नं देवैस्तन्नीयतेऽम्बरात् ॥ ४२५ ॥

गजादिजं सुदुष्प्रापं मौक्तिकं तपसा विना।
मौक्तिकं शुक्तिजं लभ्यमाकरेषु कलौ नृभिः ॥ ४२६ ॥

कुक्कुटाण्डसमं वृत्तं मौक्तिकं निबिडं गुरु।
घनजं भानुसङ्काशं देवयोग्यममानुषम् ॥ ४२७ ॥

काम्बोजकुम्भसम्भूतं धात्रीफलसमं निभम्।
आताम्रपिञ्जरच्छायं मौक्तिकं मन्ददीधिति ॥ ४२८ ॥

फणिजं वर्तुलं रम्यं नीलच्छायं महाद्युति।
पुण्यहीना न पश्यन्ति वासुकेः कुलसम्भवम् ॥ ४२९ ॥

कोलजं कोलसदृशं तद्दंष्ट्रासदृशच्छवि।
अलभ्यं मनुजै रत्नं मौक्तिकं पुण्यवर्जितैः ॥ ४३० ॥

गुञ्जाफलसम स्थौल्यात् तिमिजं मौक्तिकं लघु।
पाटलीपुष्पसदृशं मन्दजाति सुवर्तुलम् ॥ ४३१ ॥

---

१ B °भार।

वंशजं शशिसङ्काशं कङ्कोलीफलमात्रकम्।
प्राप्यते बहुभिः पुण्यैस्तद् रक्ष्यं वेदमन्त्रतः॥ ४३२॥

वर्षोपलसमं दीप्त्या पाञ्चजन्यकुलोद्भवम्।
कपोताण्डप्रमाणं तत् कान्तं पापहरं परम्॥ ४३३॥

शुक्तिजन्माम्बुधेर्मध्ये सिंहले चारवाटके।
पारसीके बर्बरे च भवेन्मुक्ताफलं शुभम्॥ ४३४॥

स्वात्यां स्थिते रवौ मेघैर्ये मुक्ता जलबिन्दवः।
निर्गीर्णाः शुक्तिभिर्मुक्ता जायन्ते निर्मलत्विषः॥ ४३५॥

स्थूला मध्यास्तथा सूक्ष्मा बिन्दुमानानुसारतः।
भवन्ति मुक्तास्तासां च मूल्यं तन्मानरूपतः॥ ४३६॥

रविमण्याख्या भवेच्छुक्तिस्तस्यां जातं ममौक्तिकम्।
निर्मलं कुङ्कुमच्छायं जातीफलसमं वरम्॥ ४३७॥

अमूल्यं तद् विनिर्दिष्टं रत्नलक्षणवेदिभिः।
दुर्लभं नृपयोग्यं स्यात् स्वल्पभाग्यैर्न लभ्यते॥ ४३८॥

सुस्निग्धं मधुरच्छायं मौक्तिकं सिंहलोद्भवम्।
आरवाटसमुत्पन्नं पीतच्छायं सुनिर्मलम्॥ ४३९॥

पारसीकोद्भवं स्वच्छं सितं मुक्ताफलं शुभम्।
ईषच्छ्यामं च रूक्षं च मौक्तिकं बर्बरोद्भवम्॥ ४४०॥

चत्वारः स्युर्महादोषा मध्यमाः षट् प्रकीर्तिताः।
एवं दश समाख्यातास्तेषां वक्ष्यामि लक्षणम्॥ ४४१॥

यत्रैकदेशे संलग्नः शुक्तिखण्डो विभाव्यते।
शुक्तिलग्नः समाख्यातः स दोषः कुष्ठकारकः॥ ४४२॥

मीनलोचनसङ्काशो दृश्यते मौक्तिके तु यः।
मत्स्याक्षः स तु दोषः स्याद् पुत्रनाशकरो ध्रुवम्॥ ४४३॥

दीप्तिहीनं गतच्छायं जठरं तद् विदुर्बुधाः ।
दारिद्र्यजननं यस्मात् तस्मात् तत् परिवर्जयेत् ॥ ४४४ ॥

मौक्तिकं विद्रुमच्छायमतिरक्तं विदुर्बुधाः ।
तस्मिन् सन्धारिते मृत्युर्जायते नात्र संशयः ॥ ४४५ ॥

उपर्युपरि तिष्ठन्ति वलयो यत्र मौक्तिके ।
त्रिवृत्तं नामतः ख्यातं दुर्भगत्वविधायकम् ॥ ४४६ ॥

अवृत्तं वलनं यत् तु चर्परं तन्निगद्यते ।
मौक्तिकं ध्रियते येन तस्य कीर्तिर्भवेत् सदा ॥ ४४७ ॥

त्रिकोणं त्र्यस्रमाख्यातं सौभाग्यक्षयकारकम् ।
दीर्घं यत् तत् कृशं मोक्तं प्रज्ञाविध्वंसकारकम् ॥ ४४८ ॥

निर्भुग्नमेकतो यत् तु कृशपार्श्वं तदुच्यते ।
सदोषं मौक्तिकं नित्यं निरुद्योगकरं हि तत् ॥ ४४९ ॥

अवृत्तं पीटकोपेतं खण्डं सम्भिन्नरूपितम् ।
अरम्यं गुणहीनं च स्वल्पमौल्यं हि मौक्तिकम् ॥ ४५० ॥

तारकाद्युतिसङ्काशं सुतारं तन्निगद्यते ।
सुवृत्तं मौक्तिकं यत् स्याद् गुणवत् तत् प्रकीर्त्यते ॥ ४५१ ॥

स्वच्छं दोषविनिर्मुक्तं निर्मलं मौक्तिकं मतम् ।
गुरुत्वं तोलने यस्य तद् घनं मौक्तिकं मतम् ॥ ४५२ ॥

शीतांशुबिम्बसङ्काशं मौक्तिकं स्निग्धमुच्यते ।
व्रणरेखाविहीनं यत् तत् स्यादस्फुटितं शुभम् ॥ ४५३ ॥

ईदृक्सर्वगुणोपेतं मौक्तिकं येन धार्यते ।
तस्यायुर्वर्धते लक्ष्मीः सर्वपापं प्रणश्यति ॥ ४५४ ॥

चतुर्धा मौक्तिकच्छाया पीता च मधुरा सिता ।
नीला चेति समाख्याता रत्नतत्त्वपरीक्षकैः ॥ ४५५ ॥

